श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐ प्राणादेरीशितारंनिखिलगुणनिधिंसर्ववेदाद्यगम्यंव्यक्ताव्यक्तात्परंतंपरमसुखनिधिंसर्वदोषातिदूरं ॥ सर्वज्ञंसर्ववेदेष्टदमपिनिखिलंभासयंतंस्वभासावंदेविष्णुंसदाहंनिखिलगुणसमूहात्परंमुक्तगम्यं ॥ १ ॥ निखिलाद्वैतसिद्धांतप्राप्ताज्ञानविनाशकः ॥ श्रीमदाचार्यसूर्योयंदद्यात्तत्त्वप्रकाशनं ॥ २ ॥ श्रीमदाचार्यसान्निध्यबलाद्यस्तस्यभाववित् ॥ प्रकटीकृत्यतंसम्यक्जयतीर्थोभिभासते ॥ ३ ॥ येनवेदांतभाष्याणिविवृतानिमहात्मना ॥ तंवंदेव्यासतीर्थाख्यंवेदांतार्थप्रसिद्धये ॥ ४ ॥ रघूत्तमगुरुर्भूयान्ममज्ञानायसर्वदा ॥ श्रीमध्वशास्त्रसंशोध्ययःसम्यक्ज्ञानमाप्तवान् ॥ ५ ॥ नत्वारमापतिंसर्वदेवानामिष्टदंहरिं ॥ भाष्यंतलवकारस्यव्याख्यास्येहंयथामति ॥ ६ ॥ इहहिविविधसांसारिकदुःखदर्शनेनविरक्तस्यशमादिमतोधिकारिणोमोक्षार्थंभगवत्स्वरूपप्रतिपादनायप्रवृत्तांतलवकारोपनिषदमन्यैरन्यथाव्याख्यातत्वेनाप्रवृत्तामिवमन्यमानोभगवानानंदतीर्थमुनिस्तांयथावद्व्याचिख्यासुःप्रारिप्सितनिर्विघ्नपरिसमाप्त्यादिप्रयोजने उपनिषत्प्रतिपाद्यगुणवन्नारायणस्तुतिनती शिष्यशिक्षार्थंग्रंथादौनिबध्नाति ॥ अनंतेति ॥ अगम्याय साकल्येनज्ञातुमशक्याय । पृथग्जनैरज्ञेयत्वंदेवादिसाधारणमित्यतउक्तं सुरैरपीति ॥ अपिशब्दःकैमुत्यद्योतनार्थः । सर्वज्ञकल्पैरपीतिवा । रमाब्रह्मादावविद्यमानंसाकल्येनज्ञातुमशक्यत्वमस्यैवकुतइत्यतउक्तं अनंतेति ॥ वक्ष्यतिचैतत् नतत्रचक्षुर्गच्छतीत्यादिना । अनेनानम्यत्वोपपादकंविशिष्टत्वमुक्तंभवति ॥ तदुपपादकमिष्टत्वंचाह ॥ सर्वेति ॥ इदमपिब्रह्मदेवेभ्यइत्यादिनावक्ष्यति । सर्वदाऽपरोक्षीकृत

---

भाष्यं ॥ हरिः ॐ ॥ अनंतगुणपूर्णत्वादगम्यायसुरैरपि । सर्वेष्टदात्रेदेवानांनमोनारायणायते ॥

नारायणोपिभगवान्ग्रंथकरणसमयेविशेषतोपितमपरोक्षीकृतवानिति तइत्यपरोक्षनिर्देशः। अनेननारायणोविषयः सर्वेष्टमेवप्र योजनं तदर्थंतज्जिज्ञासुरधिकारीतिसूचितं। तेन युक्तमेतदुपनिषदोव्याख्यानं। ननुश्रुतौकेनेषितमित्यादिप्रश्नः श्रोत्रस्यश्रोत्र मित्यादिपरिहारश्चप्रतीयते। तत्रप्रष्टा परिहर्ताच कावितिनज्ञायते। अतस्तौदर्शयति ॥ वैजयंतइति ॥ वैजयंतोनामांतरिक्ष स्थंब्रह्मसदनं। जयंतंत्वंतरिक्षगमितिवचनात्। इदानींकेनेत्यादिप्रश्नवाक्यंव्याचष्टे॥ यदिदमिति ॥ तत्रतत्र साधुष्वसाधुषुवा विषयेषुअनेनेषितमित्येतदुक्तार्थं प्रेषितमित्यस्यार्थःप्रेरितमिति। नचमनःस्वतएवयाति करणस्यकर्तृप्रयोज्यत्वनियमात्। नच जीवप्रेर्यमनःतदवश्यत्वादित्याह ॥ पुरुषावश्यमिति ॥ नचमुख्यप्राणोजीवप्रेरितएवयातीतिवाच्यं। तस्यास्मदादिसर्वजी वोत्तमत्वात्। नचसत्वप्रेरितः त्वत्समत्वात्। नापिरमाप्रेरितः तस्याअपिपरतंत्रत्वेनमुख्यतःप्रेरकत्वायोगादितिभावेनाह ॥ सर्वोत्तमइति ॥ अनेनप्रथमशब्दोव्याख्यातः। उपलक्षणमेतत्। तथाशब्दःकेनप्रेरितोयातीत्यस्यानुकर्षणार्थः समुच्चयार्थो वा। समुच्चयार्थकद्वितीयतथाशब्देनश्रौतउशब्दउक्तार्थः। चक्षुरादीनांजीवावश्यत्वस्यप्रत्यक्षतएवसिद्धत्वात् स्वातंत्र्यादिलक्षणक्री डावान्देवएवतन्नियामकोवक्तव्यः। सकइत्यर्थः। यदिनारायणएवमनआदिप्रेरकःतर्हिसकिंलक्षणकइतिप्रश्नाशयः। श्रुतौतस्मैसहो

भा०। वैजयंतेसमासीनमेकांतेचतुराननं। विष्णोर्विविदिषुस्तत्वंपर्यपृच्छत्सदाशिवः। यदिदंपुरुषावश्यंतत्रतत्रपतेन्मनः। केनतत्प्रे रितंयातिप्राणःसर्वोत्तमस्तथा। चक्षुःश्रोत्रंतथावाचंकोदेवोविनियोजयेत्।

वाचेत्यादिपरिहारवाक्यत्वज्ञापकाभावाच्छ्रोत्रस्यश्रोत्रमित्यादिपरिहारवाक्यमितिनप्रतीयते। अतोमध्येवक्तव्यमाह ॥ इतिपृष्ट इति ॥ ननुयच्छ्रोत्रस्यश्रोत्रंत्वयापृष्टं तत्सउ सएवेतिपरिहारवाक्येसइतिकस्यपरामर्शः। पूर्वकस्याप्यप्रकृतत्वादित्यतःचतुर्मुख ध्यानप्रकृतनारायणपरामर्शोयमितिभावेनाह ॥ ध्यात्वेति॥ यद्वाभगवत्स्वरूपोपदेशायवक्ष्यमाणोपनिषत्प्रतिपाद्यगुणवद्भगव द्ध्यानलक्षणंमंगलंकृतंब्रह्मणेत्याह ॥ ध्यात्वेति ॥ श्रोत्रस्यश्रोत्रमित्यादिनातत्रतत्रस्थितस्यतत्तन्नियामकत्वोक्त्यावा यदिदमुपा सतइत्यनेनविनियामकतयातत्तज्जीवसमीपस्थत्वोक्त्यावा येनप्राणःप्रणीयतइतिसर्वनियामकप्राणनियामकत्वोक्त्यावा सर्वाधार त्वं। अन्यदेवतद्विदितादित्यादिनानुपमत्वं येनवागभ्युद्यतइत्यादिनासार्वज्ञं पूर्वोक्तरीत्या तत्तन्नियामकत्वोक्त्यावा ब्रह्महदेवे भ्योविजिग्येइतिसर्वदैत्यदानवजयोक्त्यावा सर्वशक्तित्वं। यत्प्राणेननप्राणितीतिपारतंत्र्याभावोक्त्यातदुपलक्षितसर्वदोषवर्जित त्वंचोक्तमितिज्ञेयं। इदानींश्रोत्रस्यश्रोत्रमित्यादिपरिहारवाक्यंव्याचष्टे ॥ यःप्राणस्येति ॥ श्रुतौक्रमाविवक्षयोक्तावपिस्वयंमु ख्यत्वक्रममनुसृत्यप्राणस्यप्रणेताचेत्यादावुक्तं। आदिपदेनश्रोत्रवाङ्मनसांग्रहणं। नकेवलमेतावतएवनियामकः किंत्वन्येषांज्ञा नकर्मेंद्रियाणामपीत्याह ॥ सर्वशःसर्वस्येति ॥ अनेनश्रुतौप्रश्नपरिहारवाक्यगतंमनआदिपदमुपलक्षणपरमितिसूचितं। य च्छब्दस्यसविष्णुरित्युत्तरेणतच्छब्देनान्वयः। नतत्रचक्षुर्गच्छतीत्यादिवाक्यंचक्षुरादिपदेनजडेंद्रियमात्रमुच्यतइतिप्रतीतिनिरा

भा०। इतिपृष्टस्तदाब्रह्माप्राहदेवमुमापतिं। ध्यात्वानारायणंदेवंसर्वाधारमनूपमं। सर्वज्ञंसर्वशक्तिंचसर्वदोषविवर्जितं। यःप्राणस्यप्रणे ताचचक्षुरादेश्चसर्वशः।

सायन्याचष्टे ॥ **अगम्यःसर्वदेवैश्चेति** ॥ श्रुत्युक्तमुपलक्षणमितिभावेनवा नविद्मनविजानीमइतिब्रह्माज्ञेयत्वोक्त्यातदवर सर्वदेवाज्ञेयत्वमुक्तप्रायमेवेतिभावेनवासर्वदेवैरित्युक्तं । येनप्राणःप्रणीयतइतिवाक्यंव्याचष्टे ॥ **प्राणादीनामिति** ॥ अत्रापि श्रुत्युक्तमुपलक्षणमितिभावेनवा रुद्रादिसर्वनियामकप्राणनियामकत्वोक्त्यातन्नियामकत्वमुक्तप्रायमेवेतिभावेनवा प्राणादीनामि त्यादिपदप्रयोगः । येनवागभ्युद्यते येनाहुर्मनोमतं येनचक्षूंषिपश्यंति येनश्रोत्रमिदंश्रुतमितिवाक्यजातस्यतात्पर्यमाह ॥ **सर्व वेत्ताचेति** ॥ रमादीनामपिसर्ववेत्तृत्वादाह ॥ **सर्वज्ञःसर्वापेक्षयेति** ॥ अविदितादधीत्युक्ताधीत्यस्यार्थमाह ॥ **सर्वोत्तम इति** ॥ देशकालांतरयोरन्यःसर्वोत्तमःकिंनेत्याह ॥ **सर्वत्रेति** ॥ **प्रथमःखंडः** ॥ १ ॥ यदिमन्यसेसुवेदेतीत्यारभ्यनाहमन्ये सुवेदेत्यंतवाक्येरुद्रब्रह्मभ्यामेवसाकल्येनाज्ञेयत्वंविष्णोरुक्तं नसर्वैरित्यतस्तत्कैमुत्यसिद्धमितिभावेनतत्तात्पर्यमाह ॥ **यमिति** ॥ सम्यगित्यस्यविवरणं निरवशेषतइति । योनस्तद्वेदतद्वेदनो इतिवाक्यमल्पमात्रभगवत्स्वरूपज्ञानिनोपि अज्ञानित्वमुच्यतइतिप्र तीतिनिरासायव्याचष्टे ॥ **सर्वात्मनेति** ॥ तस्यतेन अज्ञातः तस्यभगवत्परिच्छिन्नत्वज्ञानित्वादितिभावः । नवेदेतिवेदचेतिवा क्यमज्ञानिनोज्ञानित्वमुच्यतइतिप्रतीतिनिरासायव्याचष्टे ॥ **योनैवमिति** ॥ एवं सर्वात्मनाविजानामीति । तस्यभगवदपरिच्छिन्न त्वज्ञानित्वादितिभावः । यद्वाऽविज्ञातंविजानतांविज्ञातमविजानतामितिवाक्यंव्याचष्टे ॥ **सर्वात्मनेत्यादिना** ॥ मतंयस्यनवे

भा० । अगम्यःसर्वदेवैश्चपरिपूर्णत्वहेतुतः । प्राणादीनांप्रणेताचसर्ववेत्ताचसर्वज्ञः । सर्वोत्तमश्चसर्वत्रसविष्णुरितिधार्यतां । **प्रथमः खंडः** ॥ १ ॥ यंसम्यङ्नैवजानातिकश्चिन्निरवशेषतः । सर्वात्मनाविजानामीतितुयस्यमतंभवेत् । तस्याज्ञातःसभगवान्योनैवंमन्यतेसदा ।

दसइत्येतत्पूर्वोक्तशंकापरिहारायव्याचष्टे ॥ **तथास्यैवेति** ॥ अस्तुसर्वात्मनाविजानामीत्यादिज्ञान्यज्ञानी । एवंनजानामीत्यादिज्ञानीतुज्ञानी ततःकिमित्यतआह ॥ **नेति** ॥ यस्मात्तथाज्ञान्यज्ञानी तस्मात्परमेश्वरोनातिवेद्यः साकल्येनज्ञातुमशक्यइतिसिद्धं । यस्मात्तथाज्ञानीसम्यक्ज्ञानी तस्मात्सर्वात्मनाऽवेद्योपिन किंतुकिंचिद्वेद्यश्चेतिसिद्धमित्यर्थः । अप्रतीतेर्नेदंयदिदमुपासतइतिवाक्यंव्याचष्टे ॥ **नेदमिति** ॥ इदमित्यनुवादेनजीवस्वरूपमितिव्याख्यानं । तद्ब्रह्मेत्युक्त्याश्रुतौनेदमित्यत्रतद्ब्रह्मेत्यनुवर्तनीयमित्युक्तंभवति । किंत्विविशेषोक्तिः । उपेत्यस्यार्थःसमीपस्थमिति । आसतेआस्ते । ननुहृदयावकाशादेरपिसमीपस्थत्वात्कथंतद्ब्रह्मस्यादित्यतआह ॥ **विनियामकमिति** ॥ तत्त्वाभिमानिदेवताव्यवच्छेदायविशेषार्थकवीत्युपसर्गः । तदेवब्रह्मेत्येतत्पराभिमतनिर्गुणब्रह्मपरमितिप्रतीतिनिरासायाह ॥ **विष्णवाख्यमिति** ॥ ब्रह्मणोजीवस्वरूपत्वाभावःकुतइतिचेत् । श्रोत्रस्यश्रोत्रमित्यादिनादेवनियामकत्वस्योक्तत्वात् । नहिनियम्यनियामकयोरभेदःसंभवति । तद्भावस्यभेदव्याप्तत्वादितिभावेनाह ॥ **नियामकमिति** ॥ तर्हिदेवैरेवभेदःसिद्ध्यतुनतुमर्त्यैः तन्नियामकत्वस्यानुक्तत्वादित्यतआह ॥ **मर्त्यानामिति** ॥ नियामकमितिवर्तते । यदाऽमराणांदेवानांनियामकतयाब्रह्मोक्तं तदामर्त्यनियामकत्वमुक्तप्रायमेवेतिभावः । अधीत्युक्तयुक्त्यंतरमाह ॥ **उक्त**

भा० । ज्ञातस्तस्यतथास्यैवनिश्शेषंमननंकृतं । इतियोमन्यतेनास्यमतःसपुरुषोत्तमः । नातिवेद्योनचावेद्यस्तस्मात्सपरमेश्वरः । नेदंजीवस्वरूपंतद्ब्रह्मविष्णवाख्यमव्ययं । किंतुयत्तेसमीपस्थमासतेविनियामकं । तदेवब्रह्मविद्धित्वंविष्णवाख्यंपरमव्ययं । नियामकंतद्देवानांमर्त्यानांकिमुतोत्तमं ।

ममिति ॥ आत्मनाविंदतेवीर्यमित्यादिवाक्याभिप्रेतयुक्त्यंतरमाह ॥ तत्प्रसादमिति ॥ प्रवृत्तयो मोक्षसाधनानुष्ठानरूपाः । प्रसादंप्रेरणमितिवा ॥ द्वितीयःखंडः ॥ २ ॥ तथाचायंश्रुत्यर्थः ॥ सदाशिवोब्रह्माणंपृच्छति ॥ केनेति ॥ मनः केनप्रेषितं प्रेरितंसत् इषितमिष्टं साध्वसाधुवाप्रति पततियाति मनस्तावत्करणत्वात्केनचित्प्रेर्यं नचजीवएवतत्प्रेरकः मनसस्तदधीनत्वेनाद र्शनात् । अतोजीवभिन्नःकश्चित्तत्प्रेरकोवाच्यः सकइतिभावः । प्राणोमुख्यप्राणः केनयुक्तोनियुक्तःप्रेरितः प्रैतिप्रकर्षेणस्वव्या पारंकरोति । नचतस्यकश्चिन्मदादिर्जीवएवप्रेरकः । तस्यास्मदादिसर्वोत्तमत्वादितिभावेनाह ॥ प्रथमइति ॥ सर्वजीवोत्तमइ त्यर्थः । तवतुतत्समत्वात् रमायाश्चपरतंत्रत्वान्नमुख्यतस्तत्प्रेरकत्वं । मुख्यप्रेरकएवमयापृष्टइतिभावः । इमांप्रमाणप्रसिद्धांवाचं केनदेवेनेषितांप्रेरितां वदंतिविद्वांसः । उशब्दश्चशब्दार्थः । चक्षुःश्रोत्रंचेतिसंबंधः । द्वंद्वैकवद्भावोयं भिन्नपदंवा । युनक्तिप्रेर यति । वागादीनांजीवानधीनत्वदर्शनात्कश्चिद्देवोनियामकोवाच्यःसचकइत्यर्थः। यदिमनआदीनांप्रेरकोदेवोनारायणस्तर्हिंसकिं लक्षणकइत्याशयः । अत्रमनोवाक्चक्षुःश्रोत्रशब्दैस्तदभिमानिदेवाश्चग्राह्याः । अतएवमुख्यप्राणप्रेरकप्रश्नोयुक्तः । अन्यथेंद्रिय प्रेरकप्रश्नप्रस्तावेऽनिंद्रियभूतमुख्यप्राणप्रेरकप्रश्नोसंगतइतिज्ञातव्यं । उपलक्षणमेतत् । इतरेंद्रियनियामकप्रश्नोपिद्रष्टव्यः ॥१॥

---

भा० । तत्प्रसादंविनाजीवेमंतव्यानप्रवृत्तयः । किमुजीवस्यतद्भावोनमंतव्यइतीर्यते ॥ द्वितीयःखंडः ॥ २ ॥

उप० । केनेषितंपततिप्रेषितंमनःकेनप्राणःप्रथमःप्रैतियुक्तः । केनेषितांवाचमिमांवदंतिचक्षुःश्रोत्रंकउदेवोयुनक्ति ॥ १ ॥

एवंशिवेनपृष्टश्चतुर्मुखोनारायणंध्यात्वापरिहारमाह ॥ श्रोत्रस्येति ॥ यत् श्रोत्रस्यश्रोत्रं श्रोत्रत्वप्रदंत्वयापृष्टं यन्मनसोमनोम नस्त्वप्रदंपृष्टं यच्चवाचोवाचंवाक्त्वप्रदंपृष्टं यश्चप्राणस्यमुख्यप्राणस्यप्राणःप्राणत्वप्रदःपृष्टः यच्चक्षुषश्चक्षुष्ट्वप्रदंपृष्टं उपलक्षणमे तत् । यच्चान्येंद्रियनियामकंपृष्टं तत् सउ सएव ममध्यानविषयीभूतोनारायणएवेत्यर्थः । श्रोत्रादींद्रियदेवतानियामकोनाराय णइतिवेत्तुःफलमाह ॥ अतिमुच्येति ॥ धीरामनोधैर्यवंतः श्रोत्रस्यश्रोत्रमित्याद्युक्तप्रकारेणनारायणंप्रेत्य प्रकर्षेणज्ञात्वा तम परोक्षीकृत्येतियावत् अस्माल्लोका च्चरमत्वेनप्रसिद्धाच्छरीरा त्प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितद्वारत्वादिलक्षणप्रकर्षेणगत्वा अ तिमुच्य प्रारब्धकर्मणेतिशेषः । अमृता मुक्ताभवंतीत्यर्थः ॥ २ ॥ अस्त्वेवंश्रोत्रादिनियामकोनारायणः सकिंलक्षणकइत्यपेक्षा यांसाकल्येनसर्वदेवाज्ञेयत्वंतावत्तस्यलक्षणमाह ॥ नतत्रेति ॥ चक्षु श्चक्षुरभिमानीदेव स्तत्रनारायणविषये नगच्छतिनजाना तीत्यर्थः । एवमुत्तरत्रापि । उपलक्षणमेतत् । नतत्रश्रोत्रंगच्छतीत्याद्यपिग्राह्यं । ननुचक्षुराद्यभिमानिसूर्याद्यज्ञेयोपिभगवान्स र्वदेवोत्तमेनत्वयाज्ञेयःस्यादित्यतआह ॥ नविद्मइति ॥ सामान्यविशेषज्ञाननिषेधार्थंवा परोक्षापरोक्षज्ञाननिषेधार्थंवाऽदरार्थंवा द्विरुक्तिः । यद्वासूर्यादीनांस्वतोनारायणज्ञानासंभवेपिसर्वदेवोत्तमइतित्वदुपदेशेनज्ञानंस्यादित्यतआह ॥ नविद्मइति ॥ एतत् नारायणस्वरूपं यथा यथावत् अनुशिष्यादनुशिष्यां युष्मदादिषूपदेशंकुर्या तथानविद्मइत्यर्थः । यद्वात्वमपिकिंसर्वात्मनानजा

उप० श्रोत्रस्यश्रोत्रंमनसोमनोयद्वाचोहवाचंसउप्राणस्यप्राणश्चक्षुषश्चक्षुः । अतिमुच्यधीराःप्रेत्यास्माल्लोकादमृताभवंति ॥ २ ॥ नतत्र चक्षुर्गच्छातिनवाग्गच्छतिनोमनोनविद्मोनविजानीमो

नासिद्ध्यपेक्षायामाह ॥ यथेति ॥ यथालोकेजनइदंगवयादिकंवस्तुएतद्गवादिसदृशमित्यनुशिष्यात् जानीयात् । तथापरमा त्माख्यंवस्तु एतत्सदृशमितिवयंनविद्मइत्यर्थः ॥ ३ ॥ तर्हिकथंजानीथेत्यपेक्षायांकार्यकारणात्मकजगद्विलक्षणत्वेनैवजानीमइ तिभावेनाह ॥ अन्यदेवेति ॥ तत्परंब्रह्म विदितात् व्यक्तात्कार्यादन्यदेवविलक्षणमेव नतुतत्सदृशं । नकेवलमेतावत् किंतु अविदितादथोअव्यक्तात्प्रकृत्यादिकारणादपिअन्यदेवेत्यर्थः। ननुकार्यकारणवैलक्षण्योक्त्याकथंमाहात्म्यविशेषलाभः। नहिकार्य वैलक्षण्यंकारणे कारणवैलक्षण्यंचकार्येस्तीत्येतावतातत्रमाहात्म्यविशेषलाभइतिचेन्न।कार्यकारणवैलक्षण्यंहितद्विरुद्धलक्षणवत्त्वं। तच्चसर्वोत्तमत्वमेवेतितल्लाभसंभवइतिभावेनाह ॥ अधीति ॥ विदितादविदिताच्चसर्वस्मादधि अधिकत्वेनवर्तमानमित्यर्थः। अ नेनानुपमत्वंसर्वोत्तमत्वंचेतिलक्षणांतरमुक्तंभवति । इदंनकेवलंस्वकल्पितमित्याह ॥ इतीति ॥ येव्यासादयो नोस्मभ्यं तत्ब्र ह्मस्वरूपं व्याचचक्षिरे व्याख्यातवंतः तेषांपूर्वेषांवचनमितिशुश्रुमेत्यर्थः। पूर्वेषांसकाशादितिवा ॥ ४ ॥ लक्षणांतराण्यपिवदँल्ल क्षणोक्तेःप्रयोजनमाह।।यद्वाचेत्यादिना॥ यद्वाचावागिंद्रियेणानभ्युदितंसम्यगुदितंनभवति। यन्मनसानमन्यतेनज्ञायतेपुरुषेण नपश्यतिनशृणोतिपुरुषः। उपलक्षणमेतत्। अनेनेंद्रियागोचरत्वंलक्षणमुक्तंभवति। यद्वाचानभ्युदितमित्यनेनसाकल्येनसर्ववेदाप्र तिपाद्यत्वंचोच्यते। एतेनसाकल्येनसर्ववेदाज्ञेयत्वमपिइंद्रियागोचरत्वेनोपपादितंभवति । यथादेवाःपरमात्मस्वरूपंसम्यक्नजानं

---

उप० । यथैतदनुशिष्यात् ॥ ३ ॥ अन्यदेवतद्विदितादथोअविदितादधि । इतिशुश्रुमपूर्वेषांयेनस्तद्व्याचचक्षिरे ॥ ४ ॥ यद्वाचाऽनभ्युदितं

तीत्यसर्वज्ञास्तथा परमात्मापिकिंनेत्याह ॥ **येनवागभ्युद्यतइत्यादिवाक्यचतुष्टयेन** ॥ वाक् वागिंद्रियविषयभूतंशब्दजातं येनानूद्यते । वाक्शब्दोवेदादिसर्ववाक्समूहवाचकोवा ॥ ५ ॥ मनो मनोविषयीभूतंपदार्थजातं येनमतं मनोविषयीकृतमाहुर्विद्वांसः ॥६॥च क्षूंषिचक्षुर्विषयभूतानिवस्तूनि। येनपश्यंति दृश्यंते ॥७॥ इदंप्रसिद्धं श्रोत्रंश्रोत्रविषयीभूतंवस्तु येनश्रुतंश्रोत्रेंद्रियविषयीकृतं। तदेवब्रह्मविद्धीत्यर्थः। अनेनसर्वज्ञत्वंलक्षणमुक्तंभवति। एवकारव्यावृत्त्यमाह॥नेदमिति॥ तत्ब्रह्म इदंजीवस्वरूपंन त्विद्धि तथाज्ञानस्यमिथ्याज्ञानत्वेनानर्थहेतुत्वादितिभावः। अनेनजीवभेदज्ञापनमेवलक्षणोक्तिप्रयोजनमुक्तंभवति। यदिजीवस्वरूपंनब्रह्म तर्हिंकिंततइत्यतआह ॥ **यदिदमिति** ॥ यदिदंप्रसिद्धं उप त्वदुपलक्षितजीवस्यसमीपे आसते विनियामकतयाआस्ते तदेवब्रह्मेत्यर्थः ॥८॥ यत्प्राणेनप्रेरितंसत्नप्राणिति नचेष्टते । किंतुस्वतएवेत्यनेनपारतंत्र्योपलक्षितसर्वदोषाभावरूपंलक्षणांतरमुक्तंभवति।येनप्राणो मुख्यप्राणः प्रणीयतेसम्यक्नीयतइतिसकलनियामकप्राणनियामकत्वोक्त्यासर्वनियामकत्वमेवलक्षणमुक्तं भवति॥९॥**प्रथमःखंडः ॥१॥** ननुयदुक्तंनोमनइतिमनोभिमानिदेवताऽज्ञेयंब्रह्मेति तदयुक्तं। तदभिमानींद्राद्यज्ञेयत्वेपिमयासम्य

---

उप० । येनवागभ्युद्यते । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥५॥ यन्मनसा(नमन्यते)नमनुतेयेनाहुर्मनोमतं । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥ ६ ॥ यच्चक्षुषानपश्यंतियेनचक्षूंषिपश्यंति । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥ ७ ॥ यच्छ्रोत्रेणनशृणोतियेनश्रोत्रमिदंश्रुतं । तदेव ब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥८॥ यत्प्राणेननप्राणितियेनप्राणःप्रणीयते । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥९॥ **इतिप्रथमःखंडः ॥१॥**

कृज्ञातुंशक्यत्वादितिरुद्रस्याशंकांपरिहरति॥यदीति॥हेरुद्रत्वंयदिब्रह्माहंसुवेदेतिमन्यसे तर्हित्वमपिइतरवत्ब्रह्मणोरूपंस्वरूपंनूनंदहरमल्पमेववेत्थ ब्रह्मस्वरूपमात्रज्ञानित्वेपितस्यसाकल्येनाज्ञेयत्वाज्ञानात् तस्यापरिच्छिन्नत्वा त्तवचतत्परिच्छिन्नत्ववेत्तृत्वाद्देतिभावः । यद्यस्मात्त्वंदहरमल्पमेववेत्थजानीयाः अथतस्मात् अस्यब्रह्मणोयद्रूपं त्वं प्रथमासप्तम्यर्थे त्वयिवर्तते । अस्यब्रह्मणोयद्रूपंदेवेषुवर्ततेतत् तेत्वया नुइदानीमपि मीमांस्यमेव ॥ १ ॥ तर्ह्यस्तुत्वदतिरिक्तःसर्वोपिजनःब्रह्मनसम्यग्वेदेति । त्वंतुब्रह्मसम्यग्वेत्थ तथाव्यवहारात् । तथाचनदेवाज्ञेयंब्रह्मेत्यतआह ॥ मन्यइति ॥ अहंमयाब्रह्मविदितंनमन्यइतिसंबंधः । तर्हिकथंव्यवहारइत्यतअज्ञानमूलकोयंव्यवहारइतिभावेनाह ॥ अहमन्येसुवेदेतीति ॥ अन्येअज्ञानिनएवजनाअहंब्रह्मसुवेदेतिवदंतीत्यर्थः ॥ तर्हित्वयाब्रह्मकिंसर्वात्मनाऽविदितं नेत्याह ॥ नोइति ॥ सर्वात्मनाब्रह्मनवेदेतिनो किंतुअल्पंवेदच । ननुयदित्वंब्रह्मसम्यक् नवेत्थतर्हि अज्ञानीस्याइत्यतोनममाज्ञानित्वं किंतुज्ञानित्वमेव । मयाब्रह्मसम्यग्विदितमितिजानतएवाज्ञानित्वात् । मयाब्रह्मसम्यक्नविदितमितिजानतस्तुज्ञानित्वादितिभावेनसाकल्येनाज्ञेयत्वंकिंचित्ज्ञेयत्वंचोपपादयति ॥ यइति ॥ नःअस्माकंमध्ये यःपुरुषःअहंतद्ब्रह्मसम्यग्वेदेतिवेदसतद्ब्रह्मनोवेदनजानाति । तस्यपरिच्छिन्नत्वज्ञानात् । यश्चाहं तद्ब्रह्मसम्यङ्नवेदेतिवेद सब्रह्मस्वरूपंवेद । तस्यापरिच्छिन्नत्वज्ञानात् । यस्ययेनमयाब्रह्मअमतंसम्यङ्मननविषयीकृतंनभवतीतिमतंमननविष

उप० । यदिमन्यसेसुवेदेतिदहरमेवापिनूनंत्वंवेत्थब्रह्मणोरूपं । यदस्यत्वंयदस्यदेवेष्वथनूमीमांस्यमेवते ॥ १ ॥ मन्येविदितंनाहमन्येसुवेदेतिनोनवेदेतिवेदच । योनस्तद्वेदतद्वेदनोनवेदेतिवेदच ।

यीकृतं । तस्यतेनब्रह्ममतंमननविषयीकृतं। ब्रह्मापरिच्छिन्नत्वमननात्। यस्ययेनमयाब्रह्मसम्यक्मतमितिमतंज्ञातंसनवेद । तस्य परिच्छिन्नत्वज्ञानात् ॥२॥ विजानतांमयाब्रह्मसम्यक्ध्यानविषयीकृतमितिध्यायतांध्यायद्भिरविज्ञातं। अविजानतां मयाब्रह्मविशेषेणध्यातंनभवतीतिजानतां ध्यायतांध्यायद्भिर्विज्ञातंविशेषेणध्यातं । अस्तुसाकल्येनाज्ञेयंब्रह्मेतरेषां किंततइत्यतआह ॥प्रतिबोधेति॥ येनब्रह्मोक्तप्रकारेणप्रतिबोधविदितं अपरोक्षज्ञानविषयीकृतं सअमृतत्वंविंदतइत्यर्थः। यदिब्रह्मप्रतिबोधविदितंतर्हिअमृतत्वंविंदतेवेदयतिप्रापयतीतिवार्थः। प्रतिबोधःकथंस्यादित्यतआह ॥मतमिति॥ उपलक्षणमेतत्। ननुअपामसोमममृताअभूमेत्यादिश्रुतौ कर्मणोमृतत्वसाधनत्वेनोक्तत्वात्कथंज्ञानस्यमोक्षसाधनत्वमितिचेन्न। प्रवृत्तकर्मणोमोक्षसाधनत्वायोगेननिवृत्तकर्मणएवतत्साधनत्वंवाच्यं। तत्रकिंज्ञानपूर्वंकृतस्यतस्यमोक्षसाधनत्वं ज्ञानोत्तरंकृतस्यवा। नाद्यः।तस्यज्ञानजन्मन्येवोपयोगात्।द्वितीयेत्वाह ॥आत्मनेति॥ ज्ञानोत्तरकृतकर्मजन्यात्मप्रसादेन वीर्यं मुक्तावानंदातिशयंविंदते। अमृतंअमृतत्वं अविद्यानिवृत्तिरूपांमुक्तिंतु विद्ययैवविंदतइत्यर्थः ॥ ३ ॥ अस्त्वेवंब्रह्मज्ञानंमोक्षसाधनं तत्कालांतरेसंपादयिष्यतइत्यतआह ॥इहेति॥ इह मदादिरूपेसद्गुरौ प्राप्तेसति चेद्यदि भवदादिरवेदीत् ब्रह्मस्वरूपं अथतर्हि सत्यंभद्रंमोक्षादिरूपं अस्तिसद्गुरूपदेशजन्यज्ञानस्यैवमोक्षसाधनत्वात् चेत्यदि इहब्रह्मस्वरूपंनावेदीत् । तर्हिमहतीविनष्टिरंधंतमःप्राप्तिरूपा । असुराणांतमःप्राप्तिस्तदानियमतोभवेत् । यदातुज्ञानि

उप० । यस्यामतंतस्यमतंमतंयस्यनवेदसः ॥ २ ॥ अविज्ञातंविजानतांविज्ञातमविजानतां । प्रतिबोधविदितंमतममृतत्वंहिविंदते । आत्मनाविंदतेवीर्यंविद्ययाविंदतेऽमृतं ॥ ३ ॥ इहचेदवेदीदथसत्यमस्तिनचेदिहावेदीन्महतीविनष्टिः ।

सद्भावेनैवगृह्णंतितत्परमितिवचनात् । एवंसद्गुरूपदेशोल्लंघनेऽनर्थप्राप्तिसद्भावात् धीराधीमंतो भूतेषुसर्वभूतेषुमध्ये भूतेषुगुरुत्वेनप्राप्तेषुसत्सु विचिंत्यायं ममसमग्रानुग्रहपूर्वकंब्रह्मोपदेक्ष्यतीतिनिश्चित्य अस्मात्समग्रानुग्रहकर्तृत्वेननिश्चितात् लोकात्लोक्यतेनेनेतिलोकोगुरुस्तस्मात्तदुपदेशेनेतियावत् प्रेत्यसम्यक्परब्रह्मस्वरूपंज्ञात्वा स्वयमपरोक्षीकृत्यच । अस्माल्लोकात्चरमत्वेन निश्चितात्शरीरात्प्रेत्यामृताभवंतीत्यर्थइति ॥ ४ ॥ इतिद्वितीयःखंडः ॥ २ ॥ अथभाष्यार्थः ॥ इदानींब्रह्महदेवेभ्योविजिग्येइत्यादिकंप्रकृतासंगतंकिमर्थमुच्यतइत्याशंकापरिहारायतस्यसंगतिंकरोति ॥ इत्यत्रेति ॥ ब्रह्मणःसाकल्येनदेवाज्ञेयत्वे । इदानींतद्वाक्यंव्याचष्टे ॥ स्थित्वेति ॥ यदिब्रह्म रामकृष्णाद्यवताररूपेणदैत्यदानवानजयत् तदातज्जयेकथंदेवानांस्वकीयत्वभ्रमःस्यात् विशेषदर्शनसत्त्वादित्यतउक्तं ॥ स्थित्वादेवेष्विति ॥ दैत्यदानवानितिशेषोक्तिः । देवेभ्यइत्येतत्पंचमीतिभ्रमनिरासायतदनूद्यविभक्त्यर्थमाह ॥ देवेभ्योर्थायेति ॥ अनेनतादर्थ्येचतुर्थीत्युक्तंभवति ॥ अथ तस्यहब्रह्मणइत्यारभ्यायंमहिमेत्यंतवाक्यंव्याचष्टे ॥ विजयं तामिति ॥ ब्रह्मज्ञानिनांदेवानामेवंभ्रमःकुतइत्यतआह ॥ आविष्टाइति ॥ तेभ्योहप्रादुर्बभूवेतिवाक्यंव्याचष्टे ॥ तेषामिति ॥ किमिदंयक्षमितीत्याद्युत्तरवाक्यानुसारेणयक्षरूपइत्युक्तं । किंसर्वेषामपिदेवानांभ्रमःनेति

---

उप० । भूतेषुभूतेषुविचित्यधीराःप्रेत्यास्माल्लोकादमृताभवंति ॥ ४ ॥ द्वितीयःखंडः ॥ २ ॥

भा० । इत्यत्राख्यायिकांवच्मिशृणुतांत्वंमहेश्वर । स्थित्वादेवेषुतद्ब्रह्मव्यजयदैत्यदानवान् । देवेभ्योऽर्थायविजयंतंदेवामेनिरेस्वकं । आविष्टाअसुरैस्तेषांप्रबोधायजनार्दनः । यक्षरूपःप्रादुरभूत्

भावेनाह ॥ उमेति ॥ एवशब्दइंद्रादिव्युदासाय अत्रयद्यपितस्मिन्नेवाकाशेस्त्रियमाजगामेत्युत्तरवाक्यपर्यालोचनयाउमासहितए वप्रादुरभूदितिज्ञायते । तेनचोमायाएवनैतादृशभ्रमवत्त्वमितिगम्यते । तथापिउमायास्तादृशभ्रमाभावेतदधिकस्यशिवस्यततो धिकस्यब्रह्मणश्चसुतरामेवंविधभ्रमाभावःसिद्धइतिभावेनशिवसमन्वितःब्रह्मणाचैवसहितइत्युक्तं । ननूमादीनांतादृशभ्रमाभावे पितैःसहप्रादुर्भावेकिंकारणं । नचेंद्रोपदेशार्थंतैःसहप्रादुर्भावः । तथापिरुद्रब्रह्मसाहित्यस्यव्यर्थत्वात्इत्याशंकांपरिहरति ॥ एते भ्योपीति ॥ यदाहमेतेभ्योभगवदुत्तमेभ्योपिपरउत्तमः । किमुभवद्भ्यः । युष्मदधिकाएतेपिमेभृत्यभूताःकिमुयूयं । तथाचम दीयएवायंविजयइतिनयुष्माभिस्तथाभ्रमःकार्यइतिज्ञापयितुंतैरपिसहोपागतइत्यर्थः । प्रयोजनांतरमाह ॥ यूयमिति ॥ इति ज्ञापयितुंविष्णुःसहतैरप्युपागतइतिपूर्वेणसंबंधः । तेग्निमब्रुवन् अथवायुमब्रुवन् अथहेंद्रमब्रुवन् इतिप्रकरणत्रयस्यतात्पर्यमाह॥ तज्ज्ञानार्थमिति ॥ यक्षरूपब्रह्मज्ञानार्थं । इंद्रश्चेत्येतएवेतिएवशब्दसंबंधः । ननुतस्मात्तिरोदधइतिइंद्रागमनेब्रह्मतिरोभाव उक्तः तत्रकिंकारणमित्यतआह ॥ तत्रेति ॥ तेषुमध्यइत्यर्थः । पृच्छतीतिनादृश्यतेतिसंबंधः । पृच्छतुकोदोषः स्वस्यस्वोपदेशा सामर्थ्याभावादित्यतआह ॥ मत्तइति ॥ तर्हिशिवब्रह्मभ्यांब्रह्मस्वरूपश्रवणंस्यादित्यतआह ॥ शिवात्ब्रह्मणश्चेति ॥ अपि

---

भा० । उमाशिवसमन्वितः । ब्रह्मणाचैवसहितएतेभ्योपिपरोह्यहं । एतेपिमेभृत्यभूताःपरिवार्यव्यवस्थिताः । इतिज्ञापयितुंविष्णुः सहतैरप्युपागतः । यूयमेतानपिज्ञातुमशक्ताःकिमुमामिति । तज्ज्ञानार्थंहुताशश्चनासिक्योवायुरेवच । इंद्रश्चक्रमशोजग्मुस्तंज्ञातुंनैवचाशकन् । तत्रेंद्रोऽधिकबुद्धित्वात्पृच्छतीतिजनार्दनः । मत्तःशिवाद्ब्रह्मणश्च

शब्दस्यशिवादित्यनेनसंबंधः नैवशक्तिमान् । इदानीमसुरावेशदुष्टत्वादितिभावः । तत्र इंद्रेसमागते । ननुयदिशिवब्रह्माणौअ
तिरोहितौतथैवस्तः तर्हिंअधिकबुद्धिरिंद्रोयक्षस्वरूपंतावेवपृच्छेत् । तथाचताभ्यामपितत्स्वरूपमिंद्रायवक्तव्यमेवेत्याशंकापरिहा
राय केशवइत्युक्तं । कश्चईशश्चकेशौताभ्यांवर्ततइत्यनेनताभ्यांसहनादृश्यतेत्युक्तंभवति । उमामात्रदर्शनेकारणमाह ॥ एषैवेति ॥
इतिज्ञापयितुमित्यनुवर्तते । तामितिशेषः ॥ इति तृतीयःखंडः ॥ ३ ॥ ब्रह्मेतिहोवाचेतिवाक्यमपेक्षितपूरणेनव्याचष्टे ॥ उ
मेति ॥ हेत्यस्यार्थःसम्यगिति । तस्माद्वाएतेदेवाअतितरामिवान्यान्देवानित्येतावदेववाक्यं एतेदेवाइत्युक्ताःकइत्याशंकांपरिह
रन्तस्मादित्युक्तहेतुप्रदर्शनपूर्वकंव्याचष्टे ॥यस्मादिति॥ अत्रवायुर्वींद्रशेषाणांसभार्याणांग्रहणेनपूर्वमुमाशिवसमन्वित इत्यत्रैते
प्युपलक्षणीयाइतिज्ञायते । ननुतस्माद्वाएतेदेवाअतितरामिवान्यान्देवान्यदग्निर्वायुरिंद्रइत्यग्निवाय्विंद्राणांस्वव्यतिरिक्तदेवोत्त
मत्वमुच्यते तदयुक्तं । तेषांब्रह्माद्युत्तमत्वाभावात् । नचसुरेभ्यस्तेधिकाइतिइंद्राद्युत्तमत्वस्यतेषामभिहितत्वात्तद्व्यतिरिक्तदेवोत्त
मत्वमेवात्रोच्यतइतिवाच्यं । इंद्रस्यस्वव्यतिरिक्तकामोत्तमत्वाभावेन नासिक्यवायोर्दक्षाद्युत्तमत्वाभावेनाग्नेश्चसूर्याद्युत्तमत्वा
भावेन तस्याप्यनुपपत्तेरितिचेन्न । यदग्निर्वायुरिंद्रइत्यग्न्यादिशब्दैरिंद्राग्निमध्यवर्तिनांकामादीनामप्युपलक्षणयाग्रहणेनान्यवरस
र्वदेवाधिकत्वमेवेंद्रकामादीनामत्रविवक्षितमितिसूचयन्नग्निवाय्विंद्राणामधिकत्वे तेह्येनमितिनिमित्तकथनादस्तुसर्वदेवाधिकत्वं ।

---

भा० । श्रोतुंनैवापिशक्तिमान् । इतिज्ञापयितुंतत्रनादृश्यतसकेशवः । एषैवज्ञानदानेतेयोग्योमेतिव्यदर्शयत् । तृतीयःखंडः ॥ ३ ॥
उमासासम्यगाचष्टतस्यैविष्णुंपरंपदं । यस्माद्ब्रह्माचवायुश्चशेषवींद्रौशिवस्तथा । सभार्यागर्विणोनासन्सुरेभ्यस्तेधिकास्ततः ।

नतुकामादीनां तत्रनिमित्तकथनाभावात् इत्याशंकापरिहारायेंद्राद्युत्तमत्वेनिमित्तकथनमुपलक्षणपरमित्याशयेनाह ॥ इंद्रस्त्विव त्यादिनाऽपश्यतामित्यंतेन ॥ यक्षरूपंब्रह्मेतिव्यजानात् उमोपदेशेनेत्यर्थः। द्वितीयस्तुशब्दोऽवधारणार्थः । तथाशब्दस्तुश ब्दार्थः कामस्तुततज्ज्ञातुंआविर्भूतयक्षस्वरूपज्ञानायपूर्वंदक्षादिभ्यउक्तवान् तेनसउत्तमइत्यर्थः । वरुणश्चेत्येतेओमित्यूचुः कामे नयक्षस्वरूपंज्ञातव्यमित्युक्तेतथैवकर्तव्यमित्युक्तवंतः । तेनतउत्तमाइत्यर्थः । तत्यक्षरूपं । तेनतावुत्तमावित्यर्थः । इंद्रस्तुप्रथमं ब्रह्मव्यजानात् नासिक्यवायुरग्निश्चप्रथमंतदपश्यतामित्यनेनवाक्यद्वयोःप्रथमंयक्षरूपेब्रह्मत्वज्ञानाभावात्तेह्येनत्प्रथमोविदांचकार ब्रह्मेतिइत्युक्तमनुपपन्नमितिशंकापरास्ता । तथाचश्रुतौनिमित्तकथनमुपलक्षणपरमितिभावः । यद्वायदग्निर्वायुरिंद्रइत्यत्राद्यादि शब्दानामितरोपलक्षकत्वंकुतोंगीकर्तव्यमित्यतस्तेह्येनत्प्रथमोविदांचकारेतिवाक्यशेषेइंद्रकामादीनांसर्वेषामप्युत्तमत्वेनिमित्तकथ नादितिभावेनतद्वाक्यंकःकथंविदांचकारेतिशंकानिरासायव्याचष्टे ॥ इंद्रस्त्वित्यादिना ॥ अस्त्वेवमुक्तरीत्याएतेषांदेवानामुत्त मत्वंतथापितस्माद्वाएतेदेवाअतितरामिवान्यान्देवान्यदग्निर्वायुरिंद्रइतिश्रुत्यर्थःकइत्यतआह॥सर्वेति॥ यस्मादुक्तरीत्याइंद्रका माद्याउत्तमास्तस्मादेतेपूर्वोक्ताःसर्वेपींद्राद्याःअद्यवरसर्वदेवाधिकाः श्रुतावुपलक्षणयाकीर्तिताइत्यर्थः । नन्वस्त्वेतेदेवाअद्यवर सर्वदेवाधिकाःतथापिकिमेतेपरस्परंसमाअथतेषुकश्चिदुत्तमइत्याशंकापरिहारायश्रुतौ तस्माद्वाइंद्रोतितरामिवान्यान्देवानित्यभि

---

भा० । इंद्रस्तुप्रथमंब्रह्मव्यजानात्तेनतूत्तमः । दक्षादिभ्यस्तथाकामस्तज्ज्ञातुंपूर्वमुक्तवान् । दक्षोबृहस्पतिश्चैवमनुःकामात्मजस्तथा। सूर्याचं द्रमसौधर्मोवरुणश्चोचुरोमिति । नासिक्यवायुरग्निश्चप्रथमंतदपश्यतां । सर्वदेवाधिकास्तस्मादेतेदेवाःप्रकीर्तिताः ।

हितं । तत्रेंद्रशब्दोपिउपलक्षणपरइतिभावेनतद्व्याचष्टे ॥ एतेभ्यइति ॥ वचनविपरिणामेनाधिकावित्यनुवर्तते । पूर्वसुरेभ्यस्ते धिकाइतिब्रह्माद्युमांतानांदेवोत्तमत्वंयदुक्तंतत्रेंद्रकामवद्दक्षाद्याधिक्यमात्रं किंत्वित्यतआह ॥ ताभ्यामिति ॥ भाष्ये नासिक्य वायुरग्निश्चेत्युक्त्या श्रुतौयदग्निर्वायुरित्युक्त्याचाग्नेर्वायुसाम्यंप्रतीयतेइत्याशंकायां पूर्वप्रसक्तानांयक्षरूपविष्णुदेवानांमध्येकोऽ वमःकःश्रेष्ठइत्यपेक्षायांचाह ॥ एतेषामिति ॥ उच्यते । अग्निर्वैदेवानामवमोविष्णुःपरमस्तदंतरेणसर्वाअन्यादेवताइतिश्रुताविं त्यर्थः । ब्रह्माद्याइत्यादिशब्देनाप्यवमाअपिदेवाग्राह्याःकिंनेतिभावेनोक्तं पूर्वमीरिताइति । अग्नेःसर्वावमत्वेकारणमाह ॥ अ ग्निरिति॥ कामादयःसर्वेइंद्रेणसहैवोमोपदेशेनब्रह्मस्वरूपंज्ञातवंतः । अग्निस्तुपश्चादिंद्रवाक्यात्तद्यक्षरूपंब्रह्मेतिव्यजानाद्यतइत्य र्थः । यद्वाउमोपदिष्टेनेंद्रेणयक्षरूपब्रह्मस्वरूपेकामादिभ्यउपदिष्टेसतितद्वाक्यात्कामादयोवरुणांताःयक्षरूपब्रह्मस्वरूपंपूर्वंज्ञातवं तः अग्निश्चपश्चाद्व्यजानादित्यवमइत्यर्थः । अस्त्वेवंसर्वेष्वपिदेवेषुपरावरभावेकिंकारणमित्यतआह ॥ तस्मादिति ॥ यस्मात्पूर्वं ब्रह्मज्ञानिनोधिकाः पश्चात्तज्ज्ञान्यवमः । तस्माद्विष्ण्वभिसंबंधात् ज्ञानादिनाविष्ण्वभिसंबंधपारावर्येण विष्णुविषयकज्ञानादिपा रावर्येणेतियावत् । तस्यैषआदेशइत्यादिइत्यधिदैवतमित्यंतंवाक्यमप्रतीतेर्व्याचष्टे ॥ व्यद्योतयदित्यादिनाऽधिदैवइत्यं तेन ॥ श्रुतौविद्युच्छब्दउपलक्षकइतिभावेनविद्युदादीनित्युक्तं । अभिव्यद्युतदित्यस्यार्थोव्यद्योतयदिति । कपिलाख्यइत्यनेन

भा० । एतेभ्यश्चेंद्रकामौतुताभ्यांब्रह्मादयोऽधिकाः । एतेषामवमोवह्निःपरमोविष्णुरुच्यते । अंतरालेस्थितास्त्वन्येब्रह्माद्याःपूर्वमीरिताः । अग्निःपश्चाद्व्यजानात्तदिंद्रवाक्यात्ततोऽवमः । तस्माद्विष्ण्वभिसंबंधात्पारावर्यंसुरेष्विदं । व्यद्योतयद्विद्युदादीन्कपिलाख्यस्तुयोहरिः ।

यदेतदित्युक्तैतच्छब्दार्थउक्तः । न्यमीमिषदित्यत्रापियच्छब्दोनुवर्तनीयइतिभावेनतस्यार्थमाह ॥ अक्ष्णोरिति ॥ श्रुतौयच्छ ब्दस्यतच्छब्दाभावेनानन्वयशंकांतदध्याहारेणपरिहरन्अभिव्यद्युतदाइत्यत्र न्यमीमिषदाइत्यत्रचोक्तस्यआइत्यस्यार्थमाह ॥ स एवेति ॥ स्थानभेदेनभेदोनशंकनीयइतिभावेनोक्तं एकइति ॥ अथाध्यात्ममित्यारभ्यतद्धेत्यंतंवाक्यंव्याचष्टे ॥ तथाध्यात्म इत्यादिना ॥ यं अनिरुद्धाख्यं । उत्तरत्रानुवादात् । तेनश्रुतावेतच्छब्दार्थउक्तः । इवशब्दार्थंव्यनक्ति ॥ सम्यगिति ॥ स्म रति स्मरणसाधनंभवति । चापिशब्दावितरेतरसमुच्चये । तद्धेत्यस्यापेक्षितस्यआइत्यस्यानुवृत्त्यर्थमाह ॥ सइति ॥ तद्धेत्यस्यत द्वनंनामेत्युत्तरत्राप्यन्वयमभिप्रेत्यसिद्धार्थत्वप्रतीतिनिरासायव्याचष्टे ॥ सविष्णुरिति ॥ ततत्वात्तत् । वननीयत्वतोवनमि त्यर्थः । यएतदेवंवेदेतिफलवाक्यंव्याचष्टे ॥ एवमिति ॥ अथहैनंसर्वाणिभूतानिसंवांछंतिउपनिषदंभोब्रूहीत्येकवाक्यताप्रती यते । तदसत् । उक्तातउपनिषदित्युत्तरवाक्यानुपपत्तेरितिभावेनसंवांछंतीत्यनंतरंवक्तव्यमाह ॥ एतच्छ्रुत्वेति ॥ उपनिषच्छ ब्दार्थोविद्याकारमिति विद्याप्रतिपाद्यमित्यर्थः । सप्रतिष्ठांसायतनामित्यपिग्राह्यं । उक्तातउपनिषदित्यस्यार्थमाह ॥ विद्यावेद्य मिति ॥ अब्रूमेत्यनंतरंवक्तव्यमाह ॥ आस्थानमिति ॥ तस्यैतपइतिवाक्यंव्याचष्टे ॥ तपइति ॥ विद्यातेषुतिष्ठतीतिसंबंधः।

---

भा० । अक्ष्णोर्निमेषणंकृत्वायःशेतेक्षीरसागरे । सएवैकःपरंब्रह्मेत्येवंतस्योपदेशनं । अधिदैवेतथाध्यात्मेयंमनोगच्छतीवच । सम्यङ्गच्छ तिकापिमनोयेनस्मरत्यपि । सोनिरुद्धाख्यईशेशःपरंब्रह्मेतिकीर्त्यते । सविष्णुस्तद्वनंनामततत्वाद्वननीयतः । एवमेनंतुयोवेदभवेत्सर्वैरपेक्षितः । एत च्छ्रुत्वाहरोपृच्छद्ब्रह्माणंपुनरेवतु । विद्याकारंममब्रूहीत्युक्तोब्रह्माहतंपुनः । विद्यावेद्यंतवप्रोक्तमास्थानंतेवदाम्यहं । तपोदमस्वधर्मेषुयेस्थितास्तेषुतिष्ठति ।

वेदाःसर्वांगानिसत्यमायतनमित्यस्यार्थमाह ॥ स्थानानीति ॥ निर्णयइति सत्यशब्दार्थः । योवाएतामितिफलवाक्यंप्रसिद्धस्वर्गलोकेतिष्ठतीतिप्रतीतिनिरासायव्याचष्टे ॥ वेदेति ॥ अखिलां सप्रतिष्ठांसायतनां । यच्छब्दश्रवणात्तच्छब्दलाभः । यदेतद्विद्युतोऽभिव्यद्युतदाइतिवाक्यंप्रमाणेन यत्एतत्प्रसिद्धंविद्युतोऽभिव्यद्युतत्सएवआःपरंब्रह्मेतिव्याख्यातं। इदानीमाइत्येतत्आङ्रूपोपसर्गभूतंतत्व्यद्युतदित्यत्रापिसंबध्यतइतिभावेनतद्व्याचष्टे ॥ विद्युतइति ॥ विद्युच्छब्दस्योपलक्षणत्वं ज्योतिःश्रेष्ठोदिवाकरइतिवचनात्सूर्यस्यज्योतिःप्राधान्यंचांगीकृत्यसूर्यादिप्रकाशानित्याह । आइत्यनुवादेनसमंतादितिव्याख्यानं। तत्रप्रमाणमाह॥ यदादित्येति ॥ अत्रसूर्यादिसर्वप्रकाशकत्वंनलभ्यतइतिप्रमाणांतरमाह ॥ तमेवेति ॥ प्रकाशयंतंतमन्वेवसर्वंसूर्यादिप्रकाशयति। तस्यभासाप्रकाशेनसर्वंजगत्प्रकाशतइत्यर्थः। न्यमीमिषदाइत्येतदपिअनूद्यपूर्ववदेवव्याचष्टे॥ न्यमीमिषदिति ॥अत्रोभयत्रच्छंदसिपरेपिव्यवहिताश्चेत्युक्तमनुसंधेयं। परमात्मनोनिमीलिताक्षत्वेप्रमाणमाह॥ सवाइति॥ गुणेभ्यःसत्वादिगुणेभ्योऽग्रेतदुत्पत्तेःपूर्वं । निशिमहाप्रलये । सुप्तशक्तिषुसत्वादिशक्तिषुसुप्तासु यएकःप्रधानःपुरातनःपुरुषःपूर्णषड्गुणः । निमीलितात्मानिमीलिताक्षस्वरूपःसन् नविद्यतेविशेषअधिकोयस्मात्सतथोक्तस्तस्मिन् जगदात्मनिजगदादानादिकर्तरि ईश्वरेआत्मनिस्वस्मिन्

---

भा० । विद्यास्थानानितस्यास्तुवेदाअंगानिनिर्णयः । वेदैतामेवमखिलंयोविष्णौप्रतितिष्ठतीत्यादिब्रह्मसारे । विद्युतःसूर्यादिप्रकाशान् । आसंमताव्द्युतत्प्राकाशयत् । यदादित्यगतंतेजोजगद्भासयतेऽखिलं । यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमितिवचनात् । तमेवभांतमनुभाति सर्वंतस्यभासासर्वमिदंविभातीतिच । न्यमीमिषत् आसंमतान्निमीलिताक्षमभवत् ।

आसीत् । सएवायंकृष्णः किलेतिसंबंधः । प्रमाणेआइत्येतत्परब्रह्मवाचकमितिव्याख्यातं । तत्रनिमित्तमाह ॥ पूर्णत्वाच्चे ति ॥ इत्युच्यतेपरंब्रह्मेतिशेषः । चशब्दोव्याख्यानांतरसमुच्चयार्थः । अभीक्ष्णंसंकल्पइतिकस्यविशेषणमितिनज्ञायते अतआह ॥अभीक्ष्णमिति ॥ ननुसंकल्पोनाममनोवृत्तिविशेषः कामःसंकल्पइतिश्रुतेः । तत्कथंमनसोविशेषणमित्यतआह ॥ संकल्पक मित्यर्थइति ॥ ननूपनिषदंभोब्रूहीतिपृष्टेउक्तातउपनिषदित्येववक्तव्यं । नतुतस्याइत्यादिनाविद्यायाःप्रतिष्ठायतनेवक्तव्ये तयो रपृष्टत्वात् । किंचोपनिषदंविद्यावेद्यंसम्यक्ब्रूहीतिहिप्रश्नाभिप्रायः । अन्यथाविद्यावेद्यस्योच्यमानत्वेनतत्सिद्धार्थत्वप्रसंगात् । तथाचकथंतत्रोक्तातउपनिषदितिपरिहारः । यावद्विद्यावेद्यस्वरूपस्यसम्यगकथितत्वादित्यतःप्रश्नपरिहारवाक्ययोरभिप्रायमाह ॥ सप्रतिष्ठामिति ॥ परिहारवाक्यानुसारेणप्रश्नवाक्येपितत्ग्राह्यमितिभावः ॥ सम्यगेवेति ॥ विद्यावेद्यस्वरूपस्यसम्यगुक्ति र्नाम स्वेनसाकल्येनाज्ञेयत्वोक्तिरेव । नतुयावत्तत्स्वरूपोक्तिः । तथात्वेउपनिषत्स्वरूपंसम्यग्वक्तुंनशक्यतइत्येववक्तव्यतयोक्तात उपनिषदितिपरिहारानुपपत्तेः । स्वेनसाकल्येनाज्ञेयत्वंचनविज्ञनविजानीमइत्यादावुक्तमितिभावः । नास्ति इत्याहेतिशेषः । त स्यैतपोदमःकर्मेतिप्रतिष्ठेतिवाक्येपदानांव्यवहितत्वेनान्वयंदर्शयति ॥ तपइति ॥ तस्यैइतिचतुर्थीषष्ठ्यर्थइतिभावेनोक्तंविद्या

भा० । सवैकिलायंपुरुषःपुरातनोयएकआसीदविशेषआत्मनि। अग्रेगुणेभ्योजगदात्मनीश्वरेनिमीलितात्मानिशिसुप्तशक्तिष्विवितिवचनात् । पूर्णत्वाच्चआः। अभीक्ष्णंसंकल्पइतिमनसोविशेषणं । संकल्पकमित्यर्थः । सप्रतिष्ठांसायतनामुपनिषदंब्रूहीत्युक्तेसम्यगेवमयोपनिषत्स्वरूपमुक्तं । तत्र वक्तव्यंनास्ति । तपोदमःकर्मचविद्यायाःप्रतिष्ठा ।

याइति । प्रतिष्ठाशब्दस्यायतनशब्दागतार्थतासिध्यर्थंतदभिप्रायमाह ॥ **तद्वस्त्विति** ॥ ननुविद्यायतनत्वंनामविद्योत्पत्तिकारणत्वं । तथाचसत्यशब्दार्थस्यसत्यवचनस्यतपआदिवत् विद्याप्रतिष्ठापकत्वमेवोचितं । ननुविद्यायतनत्वमित्यतःसत्यशब्दार्थमाह ॥ **सत्यमिति** ॥ मीमांसा उच्यतइतिशेषः । प्रसिद्धिविरोधपरिहारायतत्रप्रमाणमाह ॥ **निर्णीयतइति** ॥ सम्यक्सत्यमिति परमार्थसत्यमितीत्यर्थः । इदमित्यस्यविवरणं श्रुतीति । स्फुटमित्यस्यविवरणं व्यक्तमिति । ब्रह्मणोनिश्चयोययासेतिविग्रहः । अनेनसत्यशब्दस्यनिर्णयइतिप्रमाणकृतंव्याख्यानमपिसमर्थितं । ननुविद्यायतनानां ऋगादिचतुष्टय मितिहासः पुराणानि शिक्षादिषडंगानि मन्वादिस्मृति मीमांसाचेतिचतुर्दशत्वात्कथंवेदाः सर्वांगानि सत्यमायतनमितित्रित्वोक्तिरित्यतश्चतुर्दशत्वेपिविवक्षाभेदेनत्रित्वोक्तिर्युज्यतइतिभावेनप्रमाणमाह ॥ **ऋगिति** ॥ पंचरात्रंभारतंमूलरामायणमितिइतिहासप्रभेदोक्तिः । भगवत्परमेवेतिसंबंधः । सत्यमित्यनुवादेनमीमांसेतिव्याख्यानं ॥ **चतुर्थःखंडः** ॥ ४ ॥ **अथखंडार्थः** ॥ साकल्येनदेवाज्ञेयः परमात्मेत्यत्रार्थेकांचनाख्यायिकामाहचतुर्मुखः ॥ **ब्रह्मेति** ॥ ब्रह्म देवांतर्यामिरूपं देवेभ्योदेवार्थंदेवानांऐश्वर्यप्राप्त्यर्थं विजि

भा० । तद्वत्सुविद्याप्रतितिष्ठतीत्यर्थः । सत्यमितिमीमांसा । निर्णीयतेयतःसम्यगिदंसत्यमितिस्फुटं । श्रुतिस्मृत्युदितंसर्वंव्यक्तंमीमांसयैतया । सत्यमित्युच्यतेतस्मान्मीमांसाब्रह्मनिश्चयेतिशब्दनिर्णये । ऋग्यजुःसामाथर्वाख्याःपंचरात्रंचभारतं । मूलरामायणंचैवपुराणंभगवत्परं । वेदाइत्युच्यतेसद्भिःशिक्षाद्यंस्मृतयस्तथा । अंगानिसत्यंमीमांसातद्विद्यायतनंत्रयमितिविद्यानिर्णये ॥ **चतुर्थःखंडः** ॥ ४ ॥

उप० । ब्रह्मह देवेभ्योविजिग्ये ।

ग्येऽव्यजयत् । दैत्यदानवानितिशेषः । तस्यदेवांतर्यामिणोब्रह्मणःदैत्यादिविजयेसतिदेवाअमहीयंत । अहंकारंकृतवंतः । कथंते देवाअयंविजयोदैत्यदानवविजयोऽस्माकमेवनब्रह्मणः । तथाचायंमहिमाऽस्माकमेवेत्यैक्षंतज्ञातवंतः । एवंदेवैःअहंकारेकृतेसति तत्देवांतर्यामिरूपंब्रह्म एषांदेवानांतत्अहंकारं विजज्ञौज्ञातवत् ॥ १ ॥ एवंज्ञात्वातेभ्योदेवेभ्यः देवानांस्वस्वरूपज्ञापनाय यक्षरूपंसत् ब्रह्मवायुशेषगरुडरुद्रैःसभार्यैःसहप्रादुर्बभूव।एवंब्रह्मणिप्रादुर्भूते तेदेवाःतत्प्रादुर्भूतंनव्यजानतनज्ञातवंतः।प्रत्यक्षतोदर्शनात् कथंनव्यजानतेत्यतआह ॥ किमिति ॥ इदंपरिदृश्यमानंयक्षंकिमिति किंरूपमिति नव्यजानतेतिसंबंधः । ते प्रादुर्भूतयक्षरूपब्रह्माज्ञानिनोदेवा अग्निमब्रुवन् । किमिति हेजातवेदःएतद्विजानीहि । एतदित्युक्तंविवृणोति ॥ किमिति ॥ एवंदेवैरुक्तोग्निस्तथेति अहंयक्षस्वरूपंविजानामीत्युक्त्वातद्यक्षरूपंब्रह्मप्रत्यभ्यद्रवत् । तमागतंअग्निंत्वंकोसीत्यभ्यवदत् । यक्षरूपोहरिरितिशेषः । उत्तरमाह ॥ अग्निर्वाइति ॥ यक्षःपुनःपृच्छति ॥ तस्मिन्निति ॥ किंवीर्यंसामर्थ्यंवर्ततइति । उत्तरमाह ॥ अपीदमिति ॥ यदिदंपृथिव्यांवर्ततेइदंसर्वमपिदहेयमित्यग्निरब्रवीत् । एवमग्निनास्वस्यदाहकत्वसामर्थ्योक्तौ यक्षःहेअग्नेत्वंयदिदाह

---

उप० । अथतस्यहब्रह्मणोविजयेदेवाअमहीयंत । तऐक्षंत अस्माकमेवायंविजयोऽस्माकमेवायंमहिमेति । तद्धैषांविजज्ञौ ॥ १ ॥ तेभ्योहप्रादुर्बभूव । तन्नव्यजानतकिमिदंयक्षमिति । तेऽग्निमब्रुवन् । जातवेदएतद्विजानीहिकिमिदंयक्षमिति । तथेतितदभ्यद्रवत् । तमभ्यद्रवत्कोसीति अग्निर्वाअहमस्मीत्यब्रवीज्जातवेदावाअहमस्मीति । तस्मिंस्त्वयिकिंवीर्यमिति अपीदंसर्वंदहेयंयदिदंपृथिव्यामिति ।

कत्वसामर्थ्यस्तर्हिएतत्दहेतितस्मैतृणंनिदधौस्थापितवान् । एवमुक्तस्सोग्निः । तत् यक्षस्थापितंतृणं सर्वजवेनोपप्रेयायप्राप्तवान् । प्राप्तोपितत्तृणंदग्धुंनशशाक । सोग्निस्ततएवयक्षस्थापिततृणदाहनसामर्थ्याभावादेवएतत्विज्ञातुमहंनाशकमितिनिववृतेनिवृत्त वान् । एतदित्युक्तंविवृणोति ॥ यदेतद्यक्षमिति ॥ यच्छब्दः किंशब्दार्थः । यतश्चोदेतिसूर्यइत्यादौतथादर्शनात् । एवमुत्तर त्रापिव्याख्येयं ॥ २ ॥ अथाग्निनिवृत्त्यनंतरं । वायुंनासिक्यवायुं । तस्मादिंद्रगमनात् इंद्रगमनंनिमित्तीकृत्य । यक्षरूपंब्रह्म उमा व्यतिरिक्तब्रह्मादिभिःसहतिरोदधे । यस्मिन्प्रदेशेयक्षरूपंब्रह्मचतुर्मुखादिभिःसहतिरोहितंतस्मिन्नेवाकाशेप्रदेशेस्त्रियंदृष्ट्वातांप्र त्याजगाम । कासास्त्रीत्यतःतांविशिनष्टि ॥ बह्विति ॥ हैमवतींहिमवतःपुत्रीं एतत् एतावत्कालंदृष्टंयक्षं किमितितामुवाचमहेंद्रः ॥ ३ ॥ तृतीयःखंडः ॥ ३ ॥ एवमिंद्रेणपृष्टासोमा एतद्यक्षंयुष्मदंतर्यामिब्रह्मेतिहसम्यगुवाच । तस्य ब्रह्मणएव एतत् एतस्मि

उप० । तस्मैतृणंनिदधावेतद्दहेति । तदुपप्रेयायसर्वजवेन । तन्नशशाकदग्धुं । सततएवनिववृते । नैतदशकंविज्ञातुंयदेतद्यक्षमिति ॥ २ ॥ अथवायुमब्रुवन् वायवेतद्विजानीहिकिमेतद्यक्षमिति । तथेतितदभ्यद्रवत् । तमभ्यवदत्कोसीति । वायुर्वाअहमस्मीत्यब्रवीन्मातरिश्वावाअहमस्मी ति । तस्मिंस्त्वयिकिंवीर्यमिति । अपीदंसर्वमाददीययदिदंपृथिव्यामिति । तस्मैतृणंनिदधावेतदादत्स्वेति । तदुपप्रेयायसर्वजवेन तन्नशशाकादातुं सततएवनिववृतेनैतदशकंविज्ञातुंयदेतद्यक्षमिति । अथेंद्रमब्रवन् मघवन्नेतद्विजानीहिकिमेतद्यक्षमितितथेतितदभ्यद्रवत् । तस्मात्तिरोदधे । सत स्मिन्नेवाकाशेस्त्रियमाजगाम बहुशोभमानामुमांहैमवतीं । तांहोवाचकिमेतद्यक्षमिति ॥ ३ ॥ तृतीयःखंडः ॥ ३ ॥ ब्रह्मेतिहोवाच । ब्रह्मणो वाएतद्विजये

न्विजयेसति यूयममहीयध्वंअस्माकमेवायंविजयइतिअहंकारंकृतवंतः । ततएवोमोपदेशेनैव सइंद्र इदंयक्षरूपंब्रह्मेतिविदांच
कार ज्ञातवान् । यस्मात्ब्रह्मवायुशेषगरुडरुद्राःसभार्याःस्वांतर्यामिणोब्रह्मणोविजयेऽस्माकमेवायंविजयइतिगर्विणोनासन् त
स्माद्वा तस्मादेव एतेदेवाअन्यान्देवानिंद्रादीन् अपेक्ष्याततरामिव अतिशयिताएव । इंद्रादीनांगर्वित्वादितिभावः । यद्वात
स्मात्यत्ये अग्निर्वायुरिंद्रश्चेत्येतेदेवाअन्यान्देवान्अग्र्यवरसर्वदेवानपेक्ष्यातितरामिवअधिकाएवेत्यर्थः । अत्रेंद्रादिशब्दैःकामद
क्षादयोपिग्राह्याः । तस्मादित्युक्तंहेतुंविशदयति ॥ तेहीति ॥ हियस्मात्तेअग्निवाय्विंद्रादेवाएनत्यक्षरूपंभगवंतंनेदिष्ठंसमीप
स्थंपस्पृशुः । स्पृष्टवंतःतस्मादितिपूर्वेणसंबंधः ॥ १ ॥ तदेवविवृणोति ॥ तेहीति ॥ तेप्रागुक्तादेवाएनत्यक्षरूपंब्रह्मप्रथमःप्रथ
मंविदांचकारविदांचक्रुः ज्ञातवंतः । किमिति ब्रह्मेति । अत्रेंद्रउमोपदेशेनप्रथमंब्रह्मव्यजानात् । वाय्वग्नीतुप्रथमंयक्षरूपंअप
श्यतामितिविवेकः । उपलक्षणमेतत् । दक्षादीनामुत्तमत्वेपिभाष्योक्तंनिमित्तंग्राह्यं । इंद्राद्याअपिदेवाःकिंपरस्परंसमाः नेतिभा
वेनाह ॥ तस्माद्वाइति ॥ इंद्रशब्देनात्रकामोप्युपलक्षणीयः । अन्यान्देवान्दक्षादीन् । इंद्रस्योत्तमत्वेनिमित्तमाह ॥सहीति॥
तदेवविवृणोति ॥ सहीति ॥ उमोपदेशेनभगवत्स्वरूपंप्रथमतइंद्रोव्यजानात् । पश्चादिंद्रोपदेशेनेतरेषांभगवज्ज्ञानमितिभावः
॥ २ ॥ तस्यभगवतअधिदैवमध्यात्मंचोपास्यरूपमुपदिशति ॥ तस्येति ॥ अधिदैवतंतस्यभगवतएषवक्ष्यमाणआदेशउपदेशः

---

उप० । देवाअमहीयध्वमिति। ततोहवैविदांचकारब्रह्मेति । तस्माद्वाएतेदेवाअतितरामिवान्यान्देवान्यदग्निर्वायुरिंद्रस्तेह्येनन्नेदिष्ठंपस्पृशुः ॥१॥
तेह्येनत्प्रथमोविदांचकारब्रह्मेति । तस्माद्वाइंद्रोऽतितरामिवान्यान्देवान्। सह्येनन्नेदिष्ठंपस्पर्श । सह्येनत्प्रथमोविदांचकारब्रह्मेति ॥२॥ तस्यैषआदेशो

इतिसंबंधः । एतत्प्रसिद्धं यत्कपिलाख्यंरूपं विद्युतोविद्युदादिप्रकाशान्आसमंतात् अभिव्यद्युतत्व्यद्योतयत्प्राकाशयत् । सएवआःपूर्णत्वादाकारवाच्यंपरंब्रह्मेतितस्यादेशइत्यर्थः । यदेतदित्यत्रापिसंबध्यते । यदेतत्कपिलाख्यं आसमंतात्न्यमीमिषत् निमीलिताक्षमभवत् । अक्ष्णोर्निमेषणंकृत्वाक्षीरसागरेशेते सएवआःपूर्णत्वादाकारवाच्यंपरंब्रह्मेतितस्यादेशइत्यर्थः। अथ अधिदैवमुपास्यरूपकथनानंतरमध्यात्मंतस्यादेशप्रकारउच्यतइत्यर्थः । यदेतत्प्रसिद्धंअनिरुद्धाख्यंरूपंप्रति अभीक्ष्णंनिरंतरंसंकल्पःसंकल्पकं मनोगच्छतीवक्कापिसम्यक्नगच्छति । चशब्दोवक्ष्यमाणविशेषणसमुच्चये । अनेनैवानिरुद्धाख्येनभगवताप्रेरितंतन्मनउपस्मरतिस्मरणसाधनंभवति । तद्ध तदेव । आइत्यनुवर्तते आःपरंब्रह्मेत्यर्थः। अनिरुद्धाख्यविष्णोर्नामांतरमाह॥ तद्धतद्वनमिति ॥ तदनिरुद्धाख्यंभगवद्रूपं तद्वनंनाम ततत्वात्तत्वननीयत्वाद्वनमितितद्वनशब्दाभिधेयमित्यर्थः । किंततइत्यत आह ॥ तद्वनमित्युपासितव्यमिति ॥ ३ ॥ एवमुपासकस्यफलमाह ॥ यइति ॥ योधिकारीएतदनिरुद्धाख्यंभगवद्रूपंएवंतद्वनमितिवेदोपास्ते अथोपासनानंतरंएनमुपासकंसर्वाणिभूतानिसंवांछंति । मुक्त्यादावपिसर्वैरपेक्षितोभवेदित्यर्थः । एवमधिदैवमध्यात्मंचोपास्यभगवत्स्वरूपंश्रुत्वाहरःपुनरपिब्रह्माणंपृच्छति ॥ उपनिषदमिति ॥ भोब्रह्मन्सप्रतिष्ठांसायतनांउपनिषदंविद्यां तद्वेद्यमितियावत् । सम्यग्ब्रूहीतिहरोपृच्छदितिशेषः । एवंपृष्टोब्रह्मापरिहारमाह ॥ उक्तेति ॥ तेतवउपनिषत्विद्या मयोक्ता ।

उप० । यदेतद्विद्युतोभिव्यद्युतदा३इति । न्यमीमिषदाइत्यधिदैवतं । अथाध्यात्मं। यदेतद्गच्छतीवचमनोनैवतदुपस्मरत्यभीक्ष्णंसंकल्पः। तद्धतद्वनंनामतद्वनमित्युपासितव्यं ॥ ३ ॥ सयएतदेवंवेदाथहैनंसर्वाणिभूतानिसंवांछंति । उपनिषदंभोब्रूहीति । उक्तातउपनिषत् ।

तदेवविशदयति ॥ ब्राह्मीमिति ॥ तेतवब्राह्मींब्रह्मप्रतिपादिकां उपनिषदंविद्यां अब्रूमेतिब्रह्मोवाच । वावेतिप्रसिद्धिद्योतकंनि पातद्वयं । सम्यगेवमयोपनिषत्स्वरूपमुक्तं साकल्येनागोचरत्वस्योक्तत्वात् । अतस्तत्रवक्तव्यंनास्तीतिभावः । इदानींविद्याप्रतिष्ठ माह ॥ तस्याइति ॥ तपश्चांद्रायणादिकं । दमइंद्रियनिग्रहः । कर्मअश्वमेधादिरूपंचेत्येतत् । तस्यै तस्याउपनिषदोविद्यायः प्रतिष्ठा । विद्या तपआदिमत्सुप्रतितिष्ठतीत्यर्थः । इदानींविद्यासाधनमुपदिशति ॥ वेदाइति ॥ वेदाऋगादयः अंगानिशिक्षा दीनि सत्यंमीमांसा तस्याविद्याया आयतनमुत्पत्तिकारणमित्यर्थः । प्रतिष्ठायतनसहितोपनिषत्स्वरूपवेत्तुःफलमाह ॥ यइति ॥ योधिकारीएतांसप्रतिष्ठांसायतनांउपनिषदंवेद सपाप्मानमपहत्य अनंते देशतःकालतोगुणतश्चपरिच्छेदशून्ये स्वर्गे स्वरूपभूत रमणज्ञानरूपे लोके प्रकाशरूपे ज्येये सर्वोत्तमेविष्णौ प्रतितिष्ठति । द्विरुक्तिरादरार्था ॥छ॥ एवंसमापितभाष्योभगवानाचार्योंते पिभगवत्स्तुतिनतिरूपंमंगलमाचरति ॥यइति॥छ॥ श्रीमदानंदतीर्थार्यहृत्सरोजेव्यवस्थितः॥ आनंदादिगुणोद्रिक्तःप्रीयतांकमला पतिः ॥१॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यतलवकारोपनिषद्भाष्यस्यविवरणंवेदेशतीर्थभिक्षुविरचितंसमाप्तं॥छ॥

---

उप० । ब्राह्मींवावतउपनिषदमब्रूमेति । तस्यैतपोदमःकर्मेतिप्रतिष्ठा । वेदाःसर्वांगानिसत्यमायतनं । योहवाएतामुपनिषदमेवंवेदापहत्य पाप्मानमनंतेस्वर्गेलोकेज्येयेप्रतितिष्ठतिज्येयेप्रतितिष्ठति ॥ ४ ॥ चतुर्थःखंडः ॥ ४ ॥ इतितलवकारोपनिषत्संपूर्णा ॥

भा० । यश्चिदानंदसच्छक्तिसंपूर्णोभगवान्परः । नमोस्तुविष्णवेतस्मैप्रेष्ठायप्रेयसांचमे ॥ इतिश्रीमदानंदतीर्थभग० तलवकारोपनिषद्भाष्यंसंपूर्णं ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः । शाकः १८२९ सन १९०७.

# ॥ तलवकारव्यासतीर्थीयटीकाप्रारंभः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐ ॥ जडाजडात्मकंविश्वंकृत्वाधिष्ठायसंहरन् ॥
स्वभावात्क्रीडतेयस्तंवंदेश्रीमध्ववल्लभं ॥ १ ॥ योसुरानजयद्देवहृदयस्थस्तदर्थतः ॥ ददौचाभीष्टमिष्टेभ्यस्तंवंदेमध्ववल्लभं ॥ २ ॥
तलवकारोपनिषदंयथावद्व्याचिख्यासुर्भगवानानंदतीर्थमुनिस्तदुक्तगुणैरुपश्लोकयन्नारायणंप्रणमति ॥ अनंतेति ॥ नतत्रचक्षुर्ग
च्छतीत्यादिना सुरैरप्यगम्यत्वमुक्तं तत्सर्वथादर्शनायोग्यत्वात्किमित्यतउक्तं ॥ अनंतगुणपूर्णत्वादिति ॥ ब्रह्महदेवेभ्योविजि
ग्यइत्यादिनोक्तंसर्वेष्टदातृत्वं । इषितमिष्टंसाध्वसाधुवाप्रतिमनःपतति तत्करणत्वान्मनसःस्वतोनयुक्तं । अतःकेनप्रेषितंप्रेरितंप
तति । प्रथमोमुख्यः । युक्तोनियुक्तः । इमांवाचंकेनइषितांप्रेरितांवदंतिचक्षुःश्रोत्रंकउदेवोयुनक्तीतिप्रश्नः यन्मनआदिप्रेरकंत्व
यापृष्टं सउइतिपरिहारश्चप्रतीयते । प्रष्टा उत्तरप्रदाताच काविंतिनज्ञायते अतस्तत्प्रश्नवाक्यंव्याचष्टे ॥ वैजयंतइति ॥ वैजयं
तोनामकश्चित्पर्वतः। इतःपूर्वकस्याप्यप्रकृतत्वात्सउइतिकथंतच्छब्देनपरामर्शइत्यतोध्यानप्रकृतत्वेनतद्घटयन् श्रोत्रस्यश्रोत्रमि
त्यादिपरिहारवाक्यंव्याचष्टे ॥ ध्यात्वेति ॥ यःप्राणस्यप्रणेता चक्षुरादेश्चप्रणेता सविष्णुरवधार्यतामितिसंबंधः । चक्षुरादिप्र
णेतृत्ववेत्तुःफलमाह ॥ अतिमुच्येति ॥ अस्माल्लोकात्प्रेत्यगत्वाऽतिमुच्यसंसारादमृताभवंतीतिसंबंधः । कीदृशंभगवतःप्राणा
दिप्रेरकत्वमितिजिज्ञासायां तत्रचक्षुराद्यप्रवृत्तेःकीदृशंतदितिनजानीमइत्याह ॥ नतत्रचक्षुरिति ॥ तद्व्याचष्टे ॥अगम्यइति॥
सर्वात्मनाचक्षुराद्यगम्यस्तर्हीत्यतआह ॥ अन्यदेवेति ॥ विदिताज्जगतोऽविदिताच्छशविषाणादेरन्यदेवतत् । तत्राधीत्यस्यार्थ
माह ॥ सर्वोत्तमश्चसर्वत्रेति ॥ नतत्रचक्षुर्गच्छतीत्यादिविवृण्वन्मनोगोचरजीवात्मकत्वात्कथंमनोगोचरत्वमितिशंकांचपरिह

रति ॥ यद्वाचानभ्युदितमित्यादिना ॥ येनचक्षूंषिपश्यंतिदृश्यंते । तेतवउपआसतदेवब्रह्मविद्धि । यद्वाचानभ्युदितमित्यादिवाक्यजातंव्याचष्टे ॥ प्राणादीनामिति ॥प्रथमःखंडः॥१॥ तद्वाक्यजातस्यतात्पर्यमाह ॥ यंसम्यगिति ॥ ब्रह्मसाकल्येन ज्ञातुमशक्यमित्युक्तमुपपादयति ॥ यदीति ॥ यदित्वंब्रह्मअहंसुवेदेतिमन्यसे तर्हित्वमपिनूनंदहरमेवब्रह्मणोरूपंवेत्थ ब्रह्मणोऽनंतत्वादित्यर्थः । यत्यस्माद्दहरमेववेत्थ । अथतस्मात् त्वंत्वयिदेवेषुचास्यब्रह्मणोयद्रूपं तत्तेमीमांस्यमेव । अस्तुत्वदतिरिक्तःसर्वोपिजनःब्रह्मनसम्यग्वेदेतित्वंतुसम्यग्वेत्थेत्यतआह ॥मन्यइति॥ मामन्ये अयंब्रह्मसुसम्यग्वेदेतिवदंति अहंतुब्रह्मविदितंनमन्यइतियोजना। तर्हित्वमपिब्रह्मनवेत्थकिमित्यतआह॥ नोनवेदेति ॥ नवेदेतिनो किंतुवेदचेति । ब्रह्मणःसाकल्येनाज्ञेयत्वमुपपाद्यउपसंहरति ॥योनइत्यादिना॥ नोस्माकंमध्येयस्तुब्रह्मअहंवेदेतिवदतिसतन्नोवेद । तत्कुतः । परिच्छिन्नत्ववेदनात् । अहंनवेदेतियोवदतिअसौवेदच कुतःब्रह्मणोपरिच्छिन्नत्वज्ञानात् । यस्यब्रह्माविदितमितिमतंतस्यब्रह्मविदितं । उक्तहेतोः । यस्यब्रह्ममतमितिमतंसनवेद । उक्तहेतोः । वयंब्रह्मसम्यगपरोक्षतोविद्मइतिविजानतामविज्ञातं । उक्तहेतोः । उक्तवैपरीत्येनविजानतांविज्ञातं उक्तहेतोः। अत्रश्रवणमननापरोक्षज्ञानानांसाकल्यागोचरत्वमुच्यतेब्रह्मणः । अप्रतीतेर्योनस्तद्वेदेत्यादिव्याचष्टे ॥सर्वात्मनेत्यादिना॥ योनस्तद्वेदेत्यादेस्तात्पर्यमाह॥ नातिवेद्यइति ॥नेदंयदिदमित्येतदंतरितमप्रतीतेर्व्याचष्टे॥ नेदमित्यादिना ॥जीवब्रह्मणोरभेदाभावेस्वयंमूलाभिमतांनियामकत्वादिलक्षणांउपपत्तिमाह॥ नियामकंतदित्यादिना॥ अस्तुब्रह्मसाकल्येनागोचरइति॥ इतरेषांकथंतेनाभीष्टसिद्धिरित्यतआह ॥प्रतिबोधेति ॥ ब्रह्मश्रुतंमतंप्रतिबोधविदितंचेदमृतत्वंहिविंदतइत्यर्थः । ज्ञानेनामृतत्वंविंद

तइत्युक्तं। तत्रकिंज्ञानेनसर्वाभीष्टसिद्धिरित्यतोज्ञानोत्तरकर्मणाचेत्याह॥ आत्मनेति॥ आत्मना ज्ञानोत्तरकालीनयज्ञादिप्रयत्नेन वीर्यमानंदातिशयंविंदते ।विद्ययाऽमृतं अविद्यानिवृत्तिमिति । अस्तुब्रह्मज्ञानंमोक्षसाधनं । तत्कालांतरेसंपादयिष्यतइत्यतआह ॥इहेति॥ अथतर्हि सत्यंभद्र मस्ति। भद्रविनष्टिभावात् धीराभूतेषुभूतेष्वित्यादियोज्यं॥द्वितीयःखंडः॥२॥ ब्रह्माद्दश्यमत्यद्भुतमि त्युक्तं। तत्रार्थेकांचनाख्यायिकामाह॥ब्रह्महेत्यादिना॥ तत्तेषामहंकरं तेभ्योहप्रादुर्बभूव। ब्रह्मादिसहितमितिशेषः।तद्वाक्यजा तंव्याकरोति ॥ इत्यत्रेत्यादिना ॥ ब्रह्मादिभिःसहागमनस्यजिज्ञापयिषितंप्रयोजनमाह॥ एतेभ्योपीति ॥ प्रयोजनांतरमाह ॥ यूयमिति ॥ इंद्रेसमागच्छतिकिमर्थंतिरोदधेब्रह्मेत्यतस्तस्यप्रयोजनमाह ॥ तत्रेति ॥ पृच्छतुकिमशक्यमित्यतआह ॥ मत्त इति ॥ दैत्यदूषितत्वान्नशक्तिमान् । उमास्थापनेप्रयोजनमाह ॥ एषेति ॥ तृतीयःखंडः ॥ ३ ॥ तस्माद्वाइतिपरामृष्टोहेतुः कइतिनज्ञायते । एतेदेवाअतितरामिवान्यान्देवानित्यन्यदेवतातिशयितादेवाश्चकइत्यतस्तद्वाक्यंव्याचष्टे ॥ यस्मादिति ॥ अ थवा तस्माद्वाएतेदेवाअतितरामिवान्यान्देवान्एतेइत्युक्ताःके यदग्निर्योयमग्निर्वायुरिंद्र स्तस्मादितिपरामृष्टंहेतुमेवविशदमाह ॥ तेह्येनंनेदिष्ठंपस्पृशुरिति ॥ नेदिष्ठमतिसमीपस्थं । स्पर्शनमेवविवृणोति ॥ तेह्येनत्प्रथमःप्रथमंविदांचकारचक्रुरिति ॥ यदग्निर्वायुरिंद्रइत्युक्तेंद्रस्याग्न्यादिसाम्यंप्रतीयते तांपरिहरति ॥ तस्माद्वाइंद्रइति ॥ तद्व्याचष्टे ॥ इंद्रस्त्विति ॥ तस्माद्वाए तेदेवाइतिवाक्यंप्रकारांतरेणव्याचष्टे ॥ दक्षादिभ्यइत्यादिना ॥ ॐमितियक्षंविचार्यमेवेत्यूचुः ॥ नासिक्यवायुरित्युक्तरीत्या व्याख्यानांतरं । ब्रह्मादीनामुक्तमप्याधिक्यंप्रसंगप्राप्तंपुनराह ॥ एतेभ्यइति ॥ यदग्निर्वायुरित्युक्त्याऽग्नेःश्रेष्ठत्वप्रतीतिंनिवा

रयंस्तारतम्येकःप्रथमःकोंतिमइत्यतआह ॥ एतेषामिति ॥ पूर्वमीरिताः उत्तरकक्ष्यात्वेनेतिशेषः । अग्नेःसर्वावमत्वेकारणमाह ॥ अग्निरिति ॥ विष्णवभिसंबंधात् विष्णुज्ञानादितारतम्याभिसंबंधात् । अधिदैवमध्यात्मंचोपास्यंरूपमुपदिशति ॥ तस्यैष इत्यादिना ॥ अप्रतीतेस्तद्वाक्यजातंव्याचष्टे ॥ व्यद्योतयदित्यादिना ॥ रूपाणांस्थानभेदकृतोभेदोनमंतव्यइतिभावेनोक्तं ॥ सएवैकइति ॥ येनप्रेरितंमनोविषयान्स्मरति वननीयतःभजनीयत्वात् । तद्वनमित्युपासकस्यफलमाह ॥सयएतदिति॥ तद्व्याचष्टे ॥ एवमिति ॥ उपनिषद्विद्यायाउपदिश्यमानत्वादुपनिषदंभोब्रूहीतिप्रश्नस्यो क्तातदुपनिषदित्यादिपरिहारस्यचायुक्तत्वंप्रतीयतेऽतस्तात्पर्यंव्यंजयन्व्याचष्टे ॥ एतदित्यादिना ॥ विद्या क्रियतेनिरूप्यतेयेन प्रतिपाद्यभेदनेति । प्रतिपाद्यंपृच्छसि किंवोत्पन्नायास्तस्याअवस्थानकारणानि उतवातस्याःकारणानीत्याशयवान्ब्रह्माह ॥ उक्तातइत्यादिना ॥ तद्व्याचष्टे ॥ विद्यावेद्यमिति ॥ कानिविद्यास्थानानिइत्यतस्तस्याः वेदाः षडंगानि निर्णयःकारणानीतियोजना ॥ सत्यमित्यस्यनिर्णयइतिव्याख्यानं ॥ एतदुपनिषद्वेत्तुःफलमाह ॥ योवाएतामिति ॥ स्वर्गे स्वरूपभूतरमणज्ञानवति । लोकेप्रकाशरूपे ज्येयेश्रेष्ठे प्रतितिष्ठति । यत्प्रसिद्धस्वर्गरूपफलंप्रतीयतेतत् अनंतफलब्रह्मविद्याभ्यासिनामनुपपन्नमतस्तद्व्याचष्टे ॥ वेदेति ॥ प्रमाणेनव्याख्यातमपि व्यद्युतदाइत्यादि स्ववाक्येनविशदयति ॥ विद्युतइति ॥ सूर्यादिप्रकाशोभगवदधीनइत्युक्तं तत्स्मृतिश्रुत्युदाहरणेनसमर्थयते ॥ यदिति ॥ भगवानादौनिमीलिताक्षोभवदितिकुतइत्यतआह ॥ सइति ॥ यएकोगुणेभ्यःपरोविशेषःपुरातनःपुरुषः अग्रेनिशारूपेप्रलयकालेकारणेषुसुप्तशक्तिषुजगदीश्वरेआत्मनिनिधायनिमीलितात्माआत्मनिस्वस्मिन्नेवासीत् सोयंकिलेतिसंबंधः।

न्यमीमिषदाइत्यत्राकारस्यसमंतादित्यर्थउक्तः । अर्थांतरंचाह ॥ पूर्णत्वादिति ॥ यदेतदाःपूर्णतद्यमीमिषदित्यन्वयः । अभीक्ष्णंसंकल्पइतिकस्यविशेषणमितिनज्ञायतेऽतआह ॥ अभीक्ष्णमिति ॥ लिंगव्यत्ययोयमित्याशयवांस्तदर्थमाह ॥ **संकल्पकमिति** ॥ उपनिषदंभोब्रूहीतिप्रश्नेतस्यैतपोदमःकर्मेतिप्रतिष्ठेत्यपृष्टोक्तिःकथमित्यतःप्रश्नाभिप्रायकथनेनघटयन्नाह ॥ **सप्रतिष्ठामिति** ॥ निर्णयइत्येतत्सत्यपदेनव्याख्यातत्वेपिअस्पष्टत्वात् पुनर्व्याकरोति ॥ **सत्यमिति** ॥ ननुसत्यमितिमीमांसेतिकुतः । सत्यवचनेप्रसिद्धत्वादित्यतोनिर्वचनप्रमाणेनसमर्थयते ॥ **निर्णीयतइति** ॥ ननुविद्यास्थानानांचतुर्दशत्वात्कथंवेदाःसर्वांगानिसत्यमायतनमितिस्थानत्रित्वोक्तिरित्यतोविद्यास्थानानांचतुर्दशत्वेपिविवक्षाभेदात्रित्वोक्तिरित्याह ॥ **ऋग्यजुरित्यादिना** ॥ शिक्षाद्यं तथास्मृतय श्चांगानीत्युच्यंते । मीमांसा तर्कशास्त्रंच सत्यमित्युच्यते । यतस्तस्माद्विद्यायतनंत्रयमित्युक्तमित्यर्थः ॥ मंगलावसानस्य शास्त्रस्यप्रचयादिहेतुत्वात् भाष्यंसमाप्यांतेपिस्वेष्टदेवतास्तुतिनमनरूपंमंगलमाचरति ॥ **यइति** ॥ यत्पदंमुनिभिर्ध्यातंवेदांतश्रांतमानसैः ॥ तंवंदेपरमात्मानंविष्णुंश्रीमध्ववल्लभं ॥ १ ॥ ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादविरचिततलवकारोपनिषद्भाष्यस्यविवरणंश्रीमज्जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितंसंपूर्णं ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः । शाकः १८२९ सन १९०७.

# ॥ अथईशावास्यटीकारघुनाथतीर्थीयसहिता ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐरघुनाथोरमानाथंनत्वाव्याकुरुतेधियः ॥ विशुद्ध्यै काण्वमंत्रोपनिषद्भाष्यस्यपंचिकां ॥ ईशावास्यभाष्यंव्याचिकीर्षुर्भगवांष्टीकाकारो ग्रंथादौरमारमणकृपावलोकनप्रार्थनरूपंमं गलमाचरति ॥ वदनमंभोजमिववदनांभोजं । सौंदर्यसौरभमिवसौंदर्यसौरभं । लोचनेअलीइवलोचनाली । लिहद्भ्यांआस्वाद यद्भ्यां । लिहआस्वादनइतिधातोः अवलोकयन्निातिशेषः । हरिरितिवदंष्टीकाकारो यज्ञभुजइतिभाष्यमेवानुकरोति ॥ हरतेरि कारप्रत्ययेगुणेरपरत्वेचनिष्पन्नहरिशब्दस्ययज्ञभोक्तृवाचित्वात्तेनभाष्यदिशाप्रतिपाद्यप्रार्थनंलभ्यते । यथोक्तंगीताभाष्ये । हरिः

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीम
च्छ्रीवदनांभोजगतसौंदर्यसौरभं । लिहद्भ्यांलोचनालिभ्यांभगवान्पातुनोहरिः ॥

सर्वयज्ञादिभागहारित्वात् । इडोपहूतंगेहेषुहरेभागंक्रतुष्वहं । वर्णोमेहरितःश्रेष्ठस्तस्माद्धरिरितिस्मृतइतिमोक्षधर्मइति । गेहेषुइ ष्टिगृहेषु । तथाच हरिःसर्वयज्ञभोक्तृत्वात्यज्ञनामाभगवान्नोऽस्मान्उक्तरूपाभ्यांलोचनालिभ्यामवलोकयन्पात्वित्यर्थः । य द्वालोचनालिभ्यांपातुअवलोकयत्वित्यर्थः । करुणामृतपूर्णाभ्यांलोचनाभ्यांविलोकयेत्यन्यत्रोक्तत्वाद्यथाश्रुतेनन्वयाच्चैवमध्या हारादिनाव्याख्येयं । लिहद्भ्यामवलोकयन्नित्युभयत्रवर्तमानार्थकलडादेशशतृप्रयोगेण रमामुखावलोकनस्वमुखावलोकनयोः समानकालत्वोक्त्या स्वावलोकनसमयेभगवतोहर्षोद्रेकःसूचितः । एतदुपपादनायैववदनसौंदर्यलोचनानामंभोजसौरभालिसा

भाष्यं । श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ।

